855. ग्लसूङ् । ग्लसते जग्लसे ग्लसिता । उदित्त्वात् क्त्वि वेट् ग्लस्त्वा ग्लसित्वा । वेट्त्वात् क्तयोर्नेट् ग्लस्तः ग्लस्तवान् । घञि ग्लासः ॥

856. घसुङ् करणे । उदित्त्वान्ने घंसते जघंसे घंसिता । मूर्धन्यान्तोयमिति चन्द्रः । घंषते ॥

अथ हान्ता अष्टादश सेटश्च ॥

857. ईहि चेष्टायाम् । ईहते । गुरुनाम्यादेरिति परोक्षाया आमि ईहां चक्रे । ईहिता । घञि ईहः । स्त्रियां क्तेट इत्यः ईहा ॥

858. अहुङ् 859 प्लिहि गतौ । उदित्त्वान्ने अंहते । अनात इति पूर्वस्यात्वे ने च आनंहे । अंहिता । उणादौ अम्भिकुण्ठीति इर्नलुक् च अहिः ६१४ । तङ्कि-वङ्कीति रौ अंहिः ६९२ । असिल्यसि अंहः पापम् अमेर्वा अमेर्भहौ चान्तावि-त्यसि [९९२.] ९६२ । अहुण् भासार्थः । अंहयति ॥

859. प्लिहि । प्लेहते पिप्लेहे प्लेहिता । उणादौ श्वनित्यानि निपातनात् प्लीहा ९०२ ॥

860. गर्हि 861 गल्हि कुत्सने । गर्हते जगर्हे गर्हिता । यङि जागर्ह्यते । मनि सुगर्ह्मा । वनि सुगर्ह्वा । स्त्रियां क्तेट इत्यः गर्हा । श्वादिभ्य इति क्तौ गर्ढिः । घञि गर्हः । क्विपि रात्स इति नियमात्संयोगान्तलोपाभावे सुगर्ट् । गर्हण् विनिन्दने । युजादित्वाद्वा णिचि गर्हयति गर्हति ॥

861. गल्हि । गल्हते जगल्हे गल्हिता । यङि जागल्ह्यते । मनादिषु पूर्ववत् ॥

862. वर्हि 863 वल्हि प्राधान्ये । वर्हते ववर्हे वर्हिता । अचि वर्हः प्रधानभूतः । मुनिप्रवर्हः ॥

863 वल्हि । वल्हते ववल्हे वल्हिता । चुरादौ भासार्थौ वर्हयति वल्हयति ॥

864. वर्हि । 865 वल्हि परिभाषणहिंसाच्छादनेषु । दानेप्यन्ये । ओष्ठ्यादी एतौ पूर्वौ तु दन्त्यौष्ठ्यादी । वर्हते ववर्हे वर्हिता । घञि वर्हः । प्रज्ञाद्यणि वार्हः । फलबर्हाभ्यामितीने बार्हिणो बार्हिणः ॥

865. वल्हि । वल्हते ववल्हे वल्हिता । शन्तस्येत्यधनन्या धस्य वा ढत्वे अवल्ढुम् अवल्हिधम् । उणादौ सृणीकेतीके निपातनात् वाल्मीकः ९० । पदिपठीति इः वल्हिः [६०७] । वाहुलकादीर्धे वाल्यः । स्वार्थिके के वाल्हिका देशाः क्षत्रियाश्च ॥

866. वेहृङ् 867 जेहृङ् 868 वाहृङ् प्रयत्ने । वेहते विवेहे वेहिता । ऋदित्त्वाङे न ह्रस्वः अविवेहत् । वेहृदिति तु हन्तेर्वेहन्ति गर्भमिति वेहद्गर्भघ्नी गौः संभद्देहत्साक्षादादय इति निपातनात् [ उणादौ ८८२ ] ॥

867. जेहृङ् । जेहते जिजेहे जेहिता । ऋदित्त्वाड्डे अजिजेहत् ॥

868. वाहृङ् । वाहते ववाहे वाहिता । ऋदित्त्वाड्डे अववाहत् । क्षुब्धविरिब्धेति क्ते निपातनादिडभावे वाढ भृशम् । वाहितमन्यत् ॥

869. द्राहृङ् निक्षेपे । निद्राक्षेप इत्येके । द्राहते दद्राहे द्राहिता । ऋदित्त्वाड्डे अदद्राहत् ॥

870 ऊहि तर्के । तर्क उत्प्रेक्षा । ऊहते । उपसर्गादस्योति वात्मनेपदे समूहति समूहते । उपसर्गादूह इति क्ङिति यि ह्रस्वे अभ्युह्यते समुह्यते । गुरुनाम्यादेरिति परोक्षाया आमि ऊहा चक्रे । सनि स्वरादेरिति हेर्द्वित्वे ऊजिहिषते । क्ते ऊहितम् । क्तेट इत्य· ऊहा । घञि ऊहः ॥

871. गाहौङ् विलोडने । विलोडनं परिमलनम् । गाहते जगाहे । औदित्त्वाद्वेट् गाढा गाहिता । वेट्त्वात् क्तयोर्नेट् गाढः गाढवान् । अचि गाहः । स्त्रियां गौरादित्वाङ्ङ्याम् गाही । घञि अवगाहः ॥

872. ग्लहौङ् ग्रहणे । ग्लहते जग्लहे । औदित्त्वाद्वेट् ग्लाढा । अत्र ढस्तड्डे इति ढे ढो लुक् पूर्वस्यातो दीर्घश्च । इटि ग्लहिता । वेट्त्वात् क्तयोर्नेट् ग्लाढ ग्लाढवान् । मृग्लह· प्रजनाक्षे इत्यलि अक्षाणा ग्लहः पणः । अक्षविषयादन्यत्र घञि ग्लाहः । अथ गृहौङ् इत्येके । गर्हते गर्हिता गर्ढा गृढ· गृढिः गृहम् गृहा ॥

873. वहुङ् 874 महुङ् वृद्धौ । उदित्त्वान्ने बंहते बबंहे बंहिता । उणादौ स्याबङ्किबहीति किल्युते नलुकि च बहुलः कृष्णपक्ष ४८६ । बंहिबृंहेर्नलुक् चेतीसि बहिः १९० । बहु· बाहुरिति तु मिवहीति वा णित्यौ वहेः ७२६ ॥

874. महुङ् । उदित्त्वान्ने महते ममहे महिता । महानिति तु महेर्द्धहिवृहीति कर्तरि [ उणादौ ८८४ ] । महीत्यप्यस्यैव पदिपठीति इप्रत्ययेजन्तस्य वा ङ्याम् [ उणादौ ६०७ ] । बहुण् महुण् भासार्थौ । बहयति महयति ॥

अथ क्षान्ता अष्टौ सेट्श्चैतेषा च पान्तेषु पाठो युक्तो वैचित्र्यार्थ त्विह कृत ॥

875 दक्षि शैघ्र्ये च । शैघ्र्य शीघ्रता । चकाराद्वृद्धौ । दक्षते ददक्षे दक्षिता । अचि दक्ष· । उणादौ द्रुहिनीणे दक्षिण दक्षिणा १९४ । भुदक्षीत्याय्ये दक्षाय्यो गरुडः ३७३ ॥

876 धुक्षि 877 धिक्षि सन्दीपनक्लेशनजीवनेषु । धुक्षते दुधुक्षे धुक्षिता । मनि सुधुक्ष्मा । क्विप्लुकि सयोगस्यादावितिति को लुकि सुधुट् । क्ते मधुक्षित· ॥

877. धिक्षि। धिक्षते दिधिक्षे धिक्षिता। मनि सुधिक्ष्मा। क्विपि सुधिट्॥

878. वृक्षि वरणे। वृक्षते ववृक्षे वृक्षिता। यङ्यमतामिति री वरीवृक्ष्यते। अचि घञि वा वृक्षः। मनादिषु पूर्ववत्॥

879. शिक्षि विद्योपादाने। शिक्षते शिशिक्षे शिक्षिता। क्ते शिक्षितः। क्तेट इत्यः शिक्षा। णके शिक्षकः। शिक्षतीति तु शकेः सनन्तस्याजिज्ञासायां रूपं जिज्ञासायां तु शकेरप्यात्मनेपदमेव विद्यासु शिक्षते॥

880. भिक्षि याच्ञायाम्। भिक्षते गां राजानम्। बिभिक्षे भिक्षिता। सन्भिक्षेत्युः भिक्षणशीलो भिक्षुः। वृङ्भिक्षीति टाके भिक्षाकः भिक्षाकी। क्ते भिक्षितः। क्तेट इत्यः भिक्षा। घञि भिक्षः। केचिदलाभे लाभे चेत्याहुः॥

881. दीक्षि मौण्ड्येज्योपनयननियमव्रतादेशेषु। मौण्ड्यं वपनम्। इज्या यजनम्। उपनयनं मौञ्जीबन्धः। नियमः संयमः। व्रतादेशः संस्कारादेशः। दीक्षते दिदीक्षे दीक्षिता। इड्डित इत्यनस्य न णिड्वेति प्रतिषेधात्क्तनि दीक्षिता। क्ते दीक्षितः। क्तेट इत्यः दीक्षा। केचित्तु दीक्षि मौण्ड्ये ज्योपनयनादौ चेति वृद्धपाठं भिन्दन्ति। [ ज्य ]वते जीतः॥

882. ईक्षि दर्शने। ईक्षते। गुरुनाम्यादेरिति परोक्षाया आमि ईक्षां चक्रे। यद्वीक्ष्ये राधीक्षी इति चतुर्थ्याम् मैत्रायेक्षते ईक्षितव्यं परस्त्रीभ्यः। अचि वीक्षः। शीलिकामीत्यणोपवादे णे प्रियेक्षा। क्ते प्रेक्षितः। क्तेट इत्यः प्रेक्षा। घ्यणि उत्प्रेक्ष्यः। करणेनटि ईक्षणम्॥

अथोभयपदिनो भ्लक्षीपर्यन्ता वर्णक्रमेण॥

883. श्रिग् सेवायाम्। गित्वात्फलवति कर्तरि ईगित इत्यात्मनेपदेऽन्यत्र च शेषात्परस्मायिति परस्मैपदम्। एवं सर्वत्र। श्रयते श्रयति शिश्रिये शिश्राय। णिश्रीति डे अशिश्रियत्। श्रयिता श्रयितुम्। ऋवर्णश्र्यूर्णुगः कित इतीडभावे श्रित्वा श्रितः श्रितवान्। सनि इवृधेति वेटि शिश्रीषति शिश्रयिषति। जीणदृक्षीतीनि विश्रयणशीलो विश्रयी। दिद्युद्दृदिति क्विपि निपातनात् श्रीः। भूश्र्यद इति सोपसर्गादलि प्रश्रयः। अनुपसर्गात्तु घञि श्रायः। श्रय इति तु बाहुलकादलि। उदः श्रेरिति वालि उच्छ्रयः। पक्षे घञि उच्छ्रायः। उणादौ कावावीति णौ श्रेणिः ६३४। आश्रिरिति त्वश्रीतेसाङ्क्वङ्गीति रौ ६९२। श्मश्रुरित्यपि शेतेः श्मनः शीङो डिदिति रौ ८१०। शिर इति च शृणातेर्मिथिरञ्ज्युषीति किल्यासि ९७१॥

884. णींग् प्रापणे। अजां नयते नयति वा ग्रामम् प्रापयतीत्यर्थः। णोपदेश-

स्वादुरुपसर्गान्तर इति णत्वे प्रणयते प्रणयति । पूजाचार्यकेत्यात्मनेपदे नयते विद्वान् स्याद्वादे बटुमुपनयते । कर्तृस्थेत्यात्मनेपदे क्रोधं विनयते । क्ये अजा नीयते ग्रामम् । निन्ये निनाय । अनुस्वारेत्त्वान्नेट् नेता नेतुम् । णिगि गतिबोधेत्यत्र नीवर्जनादणिक्कर्तुः कर्मत्वाभावे नाययति भारं ग्रामं चैत्रेण । प्रणाय्यो निष्कामासंमते इति घ्यणि निपातनात् प्रणाय्यः । धाय्यापाय्येति निपातनात् सांनाय्यं हविः । परिचाय्योपचाय्येति निपातनात् आनाय्यो दक्षिणाग्निः । ये त्वमेरन्यत्राप्यमित्यविशेषमिच्छन्ति तन्मते आनाय्यो गोधुक् । जिविपून्य इति क्यपि विनीयः कल्कः । वा ज्वलादीति णे नायः । पक्षेऽचि नयः । ग्रामाग्रान्निय इति णत्वे क्विपि ग्रामणीः अग्रणीः । असरूपोपवादे इत्यणि ग्रामनाय इत्यपि । नीदाविति करणे त्रटि नेत्रम् । नियश्चानुपसर्गाद्वेति वा घञि नायः । पक्षेऽलि नयः । वोदः उन्नायः उन्नयः । अवात् अवनायः । परेर्द्यूते परिणायेन शारीन् हन्ति । पुंनाम्नि घे नीयतेऽनेनेति नयः । आनायो जालमिति घञि आनायो मृगाणाम् । उणादौ नीनूरमीति किति थे नीथं जलम् । सुनीथो नाम राजा २२७ । नियो वेति वा किति पे नीपः कदम्बः । कित्त्वाभावे नेपः पुरोधाः । नेप जलं यानं च ३०२ । ऋज्यजीति किति रे नीरम् ३८८ । नीसेति मौ नेमिश्चक्रधारा ६८७ । नियो डिदिति ऋः ना नरौ ८६४ । हुयाम्नीति तृः उन्नेता ऋत्विक् ८६३ । नियः षादिः नेष्टा ऋत्विक् ८६४ ।

अथ ऋदन्ताश्चत्वारोऽनिटश्च ॥

885. हृंग् हरणे । हरते हरति जह्रे जहार । विनिमेयेति कर्मणो वाकर्मत्वे शेषे इति षष्ठ्याम् शतस्य व्यवहरति शतं व्यवहरति । अनुस्वारेत्त्वान्नेट् हर्ता हर्तुम् । हन्नृतः स्यस्येतीटि हरिष्यति । हृगो गतताच्छील्ये इत्यात्मनेपदे पैतृकमश्वा अनुहरन्ते । हरतिरयं सकर्मकश्चाकर्मकश्च तथाभ्यवहारार्थश्चेतरार्थश्च दृश्यते । यदाकर्मकश्चाभ्यवहारार्थश्च भवति तदा णौ गतिबोधेत्यणिक्कर्तुर्नित्यं प्राप्तं कर्मत्वं हृक्रोर्न वेति विकल्प्यते । हरति मैत्रः हारयति मैत्रं मैत्रेण वा चैत्रः । अभ्यवहरति मैत्रः अभ्यवहारयति मैत्रं मैत्रेण वा चैत्रः । यदा सकर्मको भवति तदा चौर्यार्थत्वादनभ्यवहारार्थश्च तदा कर्मत्वमप्राप्तं हृक्रोर्न वेति विभाष्यते हरति द्रव्यं चौरः हारयति द्रव्यं चौरं चौरेण वा चैत्रः । यदा तु सकर्मकोऽपि देशान्तरप्रापणार्थस्तदा गत्यर्थत्वाद्गतिबोधेति नित्यं प्राप्तं कर्मत्वं विभाष्यते हरति भारं चैत्रः हारयति भारं चैत्रं चैत्रेण वा मैत्रः देशान्तरं प्रापयतीत्यर्थः । महादिस्त्वाण्णिनि व्याहारी संव्याहारी । अवहसासंस्रोरिति णे अवहारो ग्राहः । हृगो वयोनुद्यमे इत्यनि अस्थिहरः श्वा । मनोहरः । उद्यमे त्वणेव भारहारः । आङः

-शीले इत्यचि पुष्पाहरो विद्याधरः। दृतिनाथात्पशाविः दृतिहरिः नाथहरिः पशुः। न्यायावायेति घापवादे घञि संहारः अवहारः। उणादौ कुशिकहृदिकेतीके निपातनात् हृदिको यादवः ४५। द्रुहृवृहीतीणे हरिणः १९४। हृश्येतीते हरितः २१०। गयहृदयेत्यये निपातनात् हृदयम् ३७०। हिरण्येत्यन्ये निपातनात् हिरण्यम् ३८०। स्वरेभ्य इः हरिः ६०६। नीवीमहृभ्यो डित् महिः कूपः ६१६। कृहित्येणौ हरेणुर्गन्धद्रव्यम् ७७२। हसुरुहीतीति हरिदिक् ८८७। हजनिभ्यामिमन् हरिमा मृत्युः ९१७। सृहभिर्तीमनि हरीमा वायुः ९१८॥

886. भृंग् भरणे। भरते भरति। अनुस्वारेत्त्वान्नेट् भर्ता भर्तुम्। तीर्थस्य भर्ता तीर्थभर्ता कर्मजा तृचा चेति प्रतिषिद्धोपि याजकादित्वात्षष्ठीसमासः। हनृतः स्यस्येतीट् भरिष्यते भरिष्यति। सनि इवृधेति वेटि बुभूर्षति बिभरिषति। भृतः भृतवान्। घञि भारः। भर इति तु भृणातेरलि। भृगोसंज्ञायामिति क्यपि भृत्यः। संज्ञायां तु ऋवर्णेति घ्यणि भार्यो नाम क्षत्रियः। भार्या वधूः। कुक्ष्यात्मोदराद्भृगः खिः कुक्षिंभरिः आत्मंभरिः उदरंभरिः। भृवृजीति खे विश्वंभरा भूः। क्विपि विदभृत्। अजातेः शीले इति णिनि मालभारी। अत्र मालेषीके इति पूर्वपदस्य ह्रस्वः। एवमुत्पलमालभारी। उणादौ दृपृभ्रित्यते भरतः २०७। अवभ्रिति किति थे अवभृथो यज्ञान्तः २२९। कृवृभ्रिति किति शे भृशम् ५२८। भृमृत्रित्युः भरुर्देशः समुद्रश्च ७१६। ऋतृशृमृभ्रादिभ्यो रो लश्चेति णिदुः भालुरिन्द्रः ७२७। ननियेति किल्यौ द्वित्वे च बभ्रुर्नकुलः ७३३। भृगुरिति तु भ्रस्जेः स्पशिभ्रस्जेः स्लुक् चेति किल्यौ ७३१। भृपणिभ्यामिज् भुरवर्णौ च भुरिक् भुरिजौ बाहुः ८७५। दिव्यवीत्यटे भरट उडुपः १४२। शासिशंसीति तृः भर्ता पतिः ८७५। डुडुभृंग्क् पोषणे च। बिभर्ति॥

887. धृंग् धारणे। धरते धरति। अनुस्वारेत्त्वान्नेट् धर्ता धर्तुम्। आयुधादिभ्य इत्यचि वज्रधरः चक्रधरः। दण्डादेस्तु कर्मणोणित्यणि दण्डधारः सूत्रधारः। धृंङ् अविध्वंसने। धरते। धृङत् स्थाने। ध्रियते। चुरादेराकृतिगणत्वात् धारयति॥

888. डुकृंग् करणे। कृगतनादेरुः कुरुते करोति। फलवल्कर्तर्यपि परानोः कृग इति परस्मैपदे पराकरोति अनुकरोति। तनादिषु पाठसामर्थ्यात् पाठसामर्थ्यो वेति सिचो लुग्विकल्पाभावार्थः। तेन अकृत अकृथाः इत्यत्र धुट्ह्रस्वादिति नित्यमेव सिज्लुक् भवति। शयर्थश्च। तेन कुरुते कुरुत इत्यत्र कर्तर्यनद्भ्य इति शवपि भवति। चक्रे चकार। अनुस्वारेत्त्वान्नेट् कर्ता कर्तुम्। द्वित्याचिमकृ

कृत्रिमम् । गन्धनेत्यात्मनेपदे उत्कुरुते । अधेः प्रसहने अधिकुरुते । वेः कृग इत्यात्मनेपदे क्रोष्टा विकुरुते स्वरान् विकुर्वते सैन्धवाः । णौ मिथ्याकृग इत्यात्मनेपदे पद मिथ्या कारयते स्वरादिदोषदुष्टमसकृदुच्चारयतीत्यर्थः । कृगो यि चेत्युलोपे कुर्यात् कुर्वः कुर्मः । एषु कुरुच्छुर इति प्रतिषेधात् भ्वादेरिति दीर्घो न भवति । हनृत इतीटि करिष्यते करिष्यति । स्क्रसृभ्रितीटि संचस्करिव सचस्करिम । अत्र सपरेरिति स्सट् स्कृच्छृत इति गुणश्च । उपाद्भूषेति स्सटि एधोदकस्योपस्कुरुते । अत्र कृगः प्रतियत्ने इति कर्मणो वा कर्मत्वे शेषे इति षष्ठी । ह्रक्रोर्न वेत्याणिकर्तुर्णौ वा कर्मत्वे करोति कटं चैत्रः कारयति कटं चैत्रं चैत्रेण वा मैत्रः । कृगो न वेति वा गतिसंज्ञायां तिरसो वेति वा रस्य सत्वे तिरस्कृत्य तिरःकृत्य । पक्षे गतित्वाभावे क्त्वतिक्तेति समासाभावाद्यबभावे तिरःकृत्वा । कर्मणोऽणित्याणि पयस्कारः । अत्रातः कृकमीति रस्य सत्वम् । सत्यागदेति मे सत्यकारः । कृवृषीति वा क्यपि कृत्यम् । पक्षे घ्यणि कार्यम् । शकृस्तम्बादिति इः शकृत्करिर्वत्सः स्तम्बकरिर्व्रीहिः । किंयत्तद्बहोरः किंकरः किंकरा जातिरिदानीम् । किंकरीति तु हेतुतच्छीलेति टे रूपम् । यथा विद्या यशस्करी । सख्याहर्दिवेति टे सख्याकरः एककर इत्यादि । भृतौ कर्मणः कर्मकरः कर्मकरी । क्षेमप्रियमद्रभद्रात्खाण् क्षेमंकरः क्षेमकारः । मेघर्तिभयामयात्खः मेघंकरः । कृगः खनट् करणे नग्नंकरणं द्यूतम् । कृगः सुपुण्यपापेति भूते क्विपि सुकृत् । सहराजेति भूते क्वनिपि सहकृत्वा राजकृत्वा । भ्राज्यलमितीष्णौ अलंकरणशीलो अलंकरिष्णुः निराकरिष्णुः । कृगः श च वा क्रिया । क्यपि कृत्या । पक्षे क्तौ कृतिः । भिदादिनिपातनादङि कारा गुप्तिः । कारणमित्यनटि निपातनात् करोतीति कारणम् । च्व्यर्थे कर्त्राप्येति खलि सुकटंकराणि वीरणानि । अन्यथैवमिति ख्णमि अन्यथाकारं भुङ्क्ते । यथातथादीर्ष्योत्तरे यथाकारमस्तु किं तवानेन । शापे व्याप्यात् चौरंकारमाक्रोशति । स्वाद्वर्थाददीर्घात् स्वादुंकारं भुङ्क्ते । कृगोऽव्ययेनानिष्टोक्तौ क्त्वाणमौ उच्चैःकृत्य उच्चैःकृत्वा उच्चैःकारं कथयति ब्राह्मण कन्या ते गर्भिणी । तिर्यचापवर्गे तिर्यक्कृत्य तिर्यक्कृत्वा तिर्यक्कारं गतः समाप्येत्यर्थः । स्वाङ्गतःश्व्यर्थनानाविनाधार्थेन भुवश्च मुखतः कृत्य मुखतः कृत्वा मुखतः कारं गतः । एषु तृतीयोक्तं वेति वा समासः। सनि के चिकीर्षितम् । प्रज्ञाद्यणि चैकीर्षितम् । कृभ्वस्तिभ्यामिति च्वौ घटीकरोति मृदम् । अरुर्मन इति सो लुकि अरुस्करोति । तीयशम्बेति डाचि द्वितीयाकरोति क्षेत्रम् । सख्यादेर्गुणात् द्विगुणाकरोति क्षेत्रम् । अव्यक्तानुकरणेति डाचि डाच्यादाविति पूर्वस्य तो लुकि पटपटाकरोति । उणादौ कृयापाजीत्यु-

णि कारुः शिल्पी १। कृगो वेति वा किति के कृकः शिरोग्रीवम्। कर्कः श्वेताश्वः २३। करकः करकेति तु दृकॄन्नित्यके रूपम् २७। कृगो द्वे चेति किदः चक्रम् ७। कृकडीत्यम्बे करम्बो दध्योदनो दधिसक्तवश्च ३२१। कृकलेरम्भः करम्भो दधिसक्तवः ३३६। करीर इति तु किरतेः कॄशॄमितीरे ४१८। कृकॄत्रित्याले करालमुखम् ४७५। पनिकूलुभ्यो णित् कारालं लेपद्रव्यम् ४७१। कृधूतनीति किति सरे कृसरस्तिलौदनः ४४०। कृकुरिभ्यां पासः कर्पासः ५८३। कृशृकुटीति वा णिदिः कारिः शिल्पी। करिर्हस्ती विष्णुश्च ६११। कटलित्यणी करणिः सादृश्यम् ६३८। आङः कृह्निति सनोणौ आचिकीर्षणिर्व्यवसायः ६४३। कृभूभ्यां किदिति मौ कृमिः ६९०। क्रिमिरिति तु क्रमेः क्रामितमीति इप्रत्यये उपान्त्येत्वे च ६९३। जॄशॄस्त्रिति ङिति वौ कृविः रुद्रो राजा च ७०५। कृह्लियेणौ करेणुर्हस्ती ७७२। कृलाभ्यां किदित्यतौ क्रतुः ७८०। मनि कर्म ९११। करण्ड इति तु जॄकॄत्रित्यण्डे किरतेः १७३। एवं किरोङ्को रो लश्च वा करङ्कः कलङ्कः ६२। कृष कृत उर् चेत्युः कुरुः ७३४। कुरोरपत्यमिति दुनादीति ञ्यः [कौरव्यः]। कुरोर्वेति स्त्रियां तद्धुप्युतोप्राणिनश्चेत्यूङि कुरूः। कृंग्ट् हिंसायाम्। कृणुते कृणोति॥

अथ कान्तः॥

889 ह्रिक्की अव्यक्ते शब्दे। ईदित्त्वात्फलवत्कर्तरि ईगित इत्यात्मनेपदम्। अफलवति तु शेषात्परस्मायिति परस्मैपदम्। हिक्कते हिक्कति जिहिक्के जिहिक्क हिक्किता। क्ते हिक्कितम्। क्तेट इत्यः हिक्का॥

अथ चान्तास्त्रयस्तत्राद्यौ सेटावन्त्योऽनिट्॥

890. अञ्चुग् गतौ च। चकारादव्यक्ते शब्दे। गतिपूजनयोरयं परस्मैपदिषु पठितः स चास्य पाठो गतौ फलवत्कर्तर्यपि परस्मैपदार्थः। अञ्चते अञ्चति। अञ्चोनर्चायामिति नस्य लुकि अच्यते। अनात इति पूर्वस्यात्वे ने च आनञ्चे आनञ्च अञ्चिता अञ्चितुम्। उदित्त्वात् क्त्वि वेट् अक्त्वा अञ्चित्वा। अत्र एवेति क्रियाभावाद्नस्य लुग्नास्ति। वेट्त्वात् क्तयोर्नेट् अक्तः अक्तवान्। अयमञ्चुग् गतावित्येके। अचते अचति आचे आच अचिता अचितुम्। उदित्त्वात् क्त्वि वेट् अक्त्वा अचित्वा। अञ्चुग् गतावित्यन्ये। उदित्त्वान्ने अञ्चते अञ्चति। क्ये अञ्च्यते। क्ते अञ्चितः। अञ्चू गतौ च। अञ्चति। अनर्चायां नस्य लुकि अच्यते। अर्चायां नलोपाभावे अञ्च्यते॥

891. डुयाच्ंग् याञ्चायाम्। याचते याचति ययाचे ययाच। क्ते याचितः।

ऋदित्त्वाङ्डे न ह्रस्वः अययाचत् । ड्वित्त्वात्त्रिमक् याचित्रिमम् । द्वितयमित्येके । तन्मतेथौ याचथुः । क्तो सेट्त्वात् घ्यणि कत्वाभावे याच्यम् । मृगयेच्छेति निपातनान्ने याञ्चा ॥

892. डुपचींष् पाके । पचते पचति पेचे पपाच । यङि पापच्यते । यङ्-लुपि पापचीति पापक्ति । अनुस्वारेत्त्वान्नेट् पक्ता पक्तुम् । क्षैशुषीति क्तयोस्तस्य वत्वे पक्वः पक्ववान् । क्तेनिट इति चस्य कत्वे घ्यणि पाक्यः । व्याप्ये घुरकेलि-मकृष्टपच्यम् कृष्टे स्वयमेव पच्यन्ते कृष्टपच्या व्रीहयः । उणादौ विहाविशेति के-लिमे पचेलिमा माषाः ३९४ । लिहादित्वादणोपवादेचि श्वपचः । न्यङ्क्वादि-निपातनादणि कत्वे च श्वपाकः मांसपाकः । न्यङ्क्वादित्वादेव कर्मकर्तर्यचि वृद्धा-वुदन्तत्वे च दूरेपाकुः फलेपाकुः । मांसस्यानडित्यल्लुकि मांसपचनम् मांसपचनम् मांस्पाकः मांसपाकः । परिमाणार्थेति खे प्रस्थंपचः मितंपचः नखंपचा यवागूः । उदः पचीतीष्णौ उत्पचनशील उत्पचिष्णुः । ड्वित्त्वात्त्रिमकि पाकेन निर्वृत्तं पक्त्रि-मम् । पितोङ् पच्यतेसाविति पचा । स्त्रियां भावे तु गापेति क्तिरेव पक्तिः । उणादौ स्थविरेति निपातनात् कितीरे पिठिरम् ४१७ ॥

अथ जान्ताश्चत्वारस्तत्राद्यौ सेटावन्त्यौ त्वनिटौ ॥

893. राजृग् 894 टुभ्राजि दीप्तौ । राजते राजति । जृभ्रमेति वा स्वरस्यैत्वे द्वित्वाभावे च रेजे रराजे रेजुः रराजुः । राजिता । ऋदित्त्वाङ्डे अरराजत् । क्विपि सम्राट् विराट् । उणादौ शीभीत्यानके राजानकः ७१ । धापाजीत्यन्ये राजन्यः ३७९ । त्रटि राष्ट्रम् ४४६ । उक्षितक्षीत्यनि राजा १०० ॥

894. टुभ्राजि । इदित्त्वादात्मनेपदे भ्राजते । जृभ्रमेति वा स्वरस्यैत्वे द्वित्वा-भावे च भ्रेजे बभ्राजे । भ्राजिता । णौ ङे भ्राजभासेति वा ह्रस्वे अबिभ्रजत् अब-भ्राजत् । ट्वित्त्वादथुः भ्राजथुः । ट्वित्त्वमेके नेच्छन्ति । भ्राजेरात्मनेपदिनोपि पुनरिह पाठो राजृसाहचर्यप्रदर्शनार्थः । तेन यजसृजेत्यत्रास्यैव ग्रहणात्षत्वे यङ्लुपि बाभ्राष्टि । पूर्वस्य तु धातोर्गत्वे बाभ्राक्ति । द्विचार्यं तेनास्य भ्राजथुः । पूर्वस्य तु भ्राज इति रूपम् । यद्येव पत्वमेव विकल्प्यतां किं पुनः पाठेन । सत्यम् । अस्या-त्मनेपदाव्यभिचारोपदर्शनद्वारान्येषां यथादर्शनमात्मनेपदानित्यत्वज्ञापनार्थः पाठः पुनः । तेन लभते लभति सेवते सेवति । श्रोतारमुपलभति न प्रशंसितारम् ।

स्वाधीने विभवेप्यहो नरपतिं सेवन्ति किं मानिनः ॥

इत्यादयः प्रयोगाः साधव इति ॥

895. भजीँ सेवायाम्। भजते भजति। तृत्रपेत्येत्वे द्वित्वाभावे च भेजे भेजुः। यङि बाभज्यते बाभजीति बाभक्ति। अनुस्वारेत्त्वान्नेट् भक्ता भक्तुम्। श्लिषेति वा कर्तरि क्ते विभक्ता भ्रातरो रिक्थम्। पक्षे कर्मणि क्ते विभक्तं धनं तैः। भावे विभक्तं तैः। शकितकीति ये भज्यम्। बहुलमिति घ्यणि भाग्यम्। भजो विण् अर्धभाक्। युजभुजेति घिनणि भजनशीलो भागी। घञि भागः। गोचरेति निपातनात्करणाधारयोर्घञपवादे घे भगः। क्तौ भक्तिः॥

896. रञ्जीँ रागे। अकद्घिनोश्चेति नस्य लुकि रजते रजति। कुषिरञ्जोरिति कर्मकर्तरि वा श्ये परस्मैपदे च रजति वस्त्रं रजकः रज्यति वस्त्रं स्वयमेव। पक्षे एकधाताविति क्ये आत्मनेपदे च रज्यते वस्त्रं स्वयमेव। संयोगान्तत्वादवित्परोक्षाया अपि इन्ध्यसंयोगादिति कित्त्वाभावे नलोपाभावात् ररञ्जे ररञ्ज। अनुस्वारेत्त्वान्नेट् रङ्क्ता रङ्क्तुम्। णौ मृगरमणे इति नलुकि कगेवन्विति ह्रस्वे च रजयति मृगं व्याधः। मृगरमणादन्यत्र नलोपाभावे रञ्जयति नटः। केचित्त्वन्यत्रापि नलुकमिच्छन्ति राजर्षिकल्पो रजयति मनुष्यान्। नृत्खनित्यकटि रजकः शिल्पी। युजभुजेति घिनणि रञ्जनशीलो रागी। घञि भावकरणे इति नलुकि रञ्जनं रागः। व्यञ्जनाद्घञिति करणे घञि रागः। आधारे घञि रङ्गो नृत्तस्थानम्। ऋवर्णेति घ्यणि रङ्ग्यः। उणादौ पृषिरञ्जीति कित्यते रजतम् २०८। तुदादिवृजीति कित्यने रजनं हरिद्रा। महारजनं कुसुम्भम् २७२। गौरादित्वाङ् ङ्यां रजनी। रञ्जेः किदित्यनौ रजनिः रात्रिः ६८१। मिथिरञ्ज्युषीति कित्यसि रजः ९७१। रञ्जीच् रागे। रज्यते रज्यति॥

अथ टान्तः सेट् च॥

897. रेटृग् परिभाषणयाचनयोः। रेटते रेटति रिरेटे रिरेट रेटिता रेटितुम्। क्ते रेटितम्। ऋदित्वाङे न ह्रस्वः अरिरेटत्॥

अथ णान्तः सेट्॥

898. वेणृग् गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु। वादित्रस्य वाद्यभाण्डस्य वादनाय ग्रहणं वादित्रग्रहणम्। वेणते वेणति विवेणे विवेण वेणिता वेणितुम्। ऋदित्वाङे न ह्रस्वः अविवेणत्। अचि वेणः। णके स्त्रियाम् वेणिका। उणादौ इर्णुर्निङोति णे वेण्णा नाम नदी १८२। वीणेति तु पूर्वोक्तेति किति णे वेलेः १८३। वेणिरित्यपि कायाणीति णावस्येर ६३४॥

अथ तान्तः सेट्॥

899. चतेग् याचने। चतते चतति चेते चचात चतिता चतितुम्। गदिस्थान्यञ्ज-

नादेरिति वा वृद्धेर्न श्विजाग्रिति प्रतिषेधे अचतीत् । क्ते चतितम् । उणादौ कृगॄश्रिति वरटि चत्वरम् ४४१ । वाद्यसीत्युरे चतुरः ४२३ । चतेहर् चत्वारः ९४८ ।

अथ थान्तास्त्रयः सेटश्च ॥

900 प्रोथृग् पर्याप्तौ । पर्याप्तिः पूर्णता। प्रोथते प्रोथति पुप्रोथे पुप्रोथ प्रोथिता प्रोथितुम् । ऋदित्वाङ्के अपुप्रोथत् । अचि प्रोथोऽश्वघोणाधः प्रियश्च युवा । प्रियं प्रोथमनुव्रजेत् ॥

901. मिथृग् मेधाहिंसयोः । मेथते मेथति मिमिथे मिमेथ मेथिता मेथितुम् । क्ते मिथितम् । ऋदित्वाङ्के न ह्रस्वः अमिमेथत् । क्ये मिथ्यते । लिहाद्यचि मेथः । गौरादित्वाङ् ङ्याम् मेथी ।

मेथीबद्धोपि हि भ्राम्यन् घासग्रासं करोति गौः ॥

उणादौ किलिपिलीति इः मेथिः खलमध्यस्थूणा ६०८ ॥

902. मेथृग् सगमे च । चकारान्मेधाहिंसयोः । मेथते मेथति मिमेथे मिमेथ मेथिता मेथितुम् । क्ते मेथितम् । ऋदित्वाङ्के न ह्रस्वः अमिमेथत् । क्ये मेथ्यते । अचि मेथः । गौरादित्वाङ् ङ्याम् मेथी ॥

अथ दान्ताः षट् सेटश्च ॥

903. चदेग् याचने । चदते चदति चेदे चचाद चदिता चदितुम् । क्ते चदितम् । एदित्वाद्व्यञ्जनादेरिति वा वृद्धेर्न श्विजाग्रिति प्रतिषेधे अचदीत् ॥

904. ऊबुन्दृग् निशामने । निशामनमालोचनम् । बुन्दते बुन्दति । क्ये बुद्यते । बुबुन्दे बुबुन्द बुन्दिता बुन्दितुम् । ऋदित्वाङ्डि अबुदत् अबुन्दीत् । ऊदित्वात् क्त्वि वेट् बुत्त्वा बुन्दित्वा । वेट्त्वात् क्तयोर्नेट् बुन्नः बुन्नवान् । धान्तोयमिति नन्दी बुन्धते बुन्धति बुध्यते अबुधत् अबुन्धीत् बुबुन्धे बुबुन्ध बुन्धिता बुन्धितुम् बुद्धा बुन्धित्वा बुद्धः बुद्धवान् । अयमूदेदृगित्येके ॥

905 णिदृग् 906 णेदृग् कुत्सासंनिकर्षयोः । पाठे इति नत्वे नेदते नेदति । णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणेदते प्रणेदति । निद्यते निनिदे निनेद नेदिता नेदितुम् । ऋदित्वाङ्के अनिनेदत् ॥

906. णेदृग् । पाठे इति नत्वे नेदते नेदति नेद्यते । णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणेदते प्रणेदति । निनेदे निनेद नेदिता । क्ते नेदितम् । ऋदित्वाङ्के अनिनेदत् ॥

907 मिदृग् 908 मेदृग् मेधाहिंसयोः । मेदते मेदति मिद्यते मिमिदे मिमेद मेदिता । क्ते मिदितः । ऋदित्वाङ्के अमिमेदत् ॥

908. मेदृग् । मेदते मेदति मेद्यते मिमेदे मिमेद मेदिता । क्ते मेदितः । ऋदित्वाङ्गे अमिमेदत् । ञिमिदाङ् स्नेहने । मेदते । ञिमिदाम् स्नेहने । मेद्यति । मिदुण् स्नेहने । मिन्दयति ॥

अथ धान्ताश्चत्वारः सेटश्च ॥

909. मेधृग् संगमे च । चकारान्मेधाहिंसयोः । मेधते मेधति मेध्यते मिमेधे मिमेध मेधिता । क्ते मेधितः । ऋदित्वाङ्गे अमिमेधत् । क्टेट इत्यः मेधा । घ्यणि मेध्यम् । कर्मणोणित्याणि अश्वमेधः । अजातेरिति णिनि गृहमेधी । उणादौ पदिपठीति इः मेधिः [ ६०७ ] ॥

910. शृधूग् 911. मृधूग् उन्दे । उन्दः क्लेदनम् । शृधू तालव्यादिः । शर्धते शर्धति शशृधे शशर्ध शर्धिता । ऊदित्वात् क्त्वि वेट् शृद्ध्वा शर्धित्वा । वेट्त्वात् क्तयोर्नेट् शृद्धः शृद्धवान् । शृधुङ् शब्दकुत्सायाम् । शर्धते ॥

911. मृधूग् । मर्धते मर्धति ममृधे ममर्ध मर्धिता । ऊदित्वात् क्त्वि वेट् मृद्ध्वा मर्धित्वा । वेट्त्वात् क्तयोर्नेट् मृद्धः मृद्धवान् । नाम्युपान्त्येति के मृधं रणः ॥

912. बुधृग् बोधने । बोधते बोधति बुबुधे बुबोध बोधिता । ऋदित्वाङ्डि अबुधत् अबोधीत् । आत्मनेपदे स्वडोसत्त्वे अबोधिष्ट । क्ते बुधितः । नायमृदिदित्येके । बुध अवगमने ज्वलादिः । बोधति । वा ज्वलादीति णे बोधः । नाम्युपान्त्येति के बुधः । बुधिंच् ज्ञाने । बुध्यते । अविवक्षितकर्मत्वेन गत्यर्थेति कर्तरि क्ते बुद्धः ॥

अथ नान्तास्त्रयः सेटश्च ॥

913. खनूग् अवदारणे । खनते खनति । गमहनेत्यल्लुकि चखे चख्नुः । खनिता । ऊदित्वात् क्त्वि वेट् खात्वा । अत्राः खनीन्यात्वम् । खनित्वा । ये न वेति वाल्वे खायते खन्यते । यङि चाखायते चङ्खन्यते । यङ्लुपि चङ्खनीति चङ्खन्ति । वेट्त्वात् क्तयोर्नेट् खातः खातवान् । खेयेति यद्यपि निपातनात् खेयम् । नृत्खनित्यकटि खनकः खनकी । क्वचिदिति डे खन्यते खम् परिखाता परिखा । लूधूस्वितीत्रे खनन्ति तेन खनित्रम् । खनो डडरेकेकयकघं च आखः आखरः आखनिकः आखनिकवकः आखनः आखानः । उणादौ मृमृखनीति किति त्रटि स्वार्थे चौरकुर्न डित्रम् ४४९ । कृगृकुटीति वा णिदिः खानिः खनिधाकरः ६२९ । पराड्भ्यामिति डित्यौ आखुः ७४२ ॥

914. दानी अवखण्डने । भार्जंशे शान्दानेति सनि पूर्वस्येतो दीर्घत्वे च दीदांसते दीदांसति । अर्थान्तरे तु सन्नाभावे प्रत्ययान्तराण्यपि भवन्ति ॥

915. शानी तेजने । निशाने शान्दानिति सनि पूर्वस्येतो दीर्घत्वे च शीशांसते शीशांसति शस्त्रम् । अर्थान्तरे तु सनोभावे प्रत्ययान्तराण्यपि ॥

अथ पान्तोनिट् च ॥

916. शपीं आक्रोशे । आक्रोशो विरुद्धानुध्यानम् । शपते शपति । अनेकार्थत्वादुपलम्भनेपि शप उपलम्भने इत्यात्मनेपदे चैत्राय शपते । अत्र श्लाघह्नुस्थेति चतुर्थी । शेपे शशाप रिपुम् । यङि शाशप्यते । यङ्लुपि शाशपीति शाशप्ति । अनुस्वारेत्त्वान्नेट् शप्ता शप्तुम् । शकितकीति घ्यणपवादे ये शप्यः । घञि शापः । उणादौ भृशीशपीत्यये शपथः २३२ । शाशपीति दे शब्दः २३७ । शबल इति तु शमेर्व च वेत्यले शाम्यतेः ४७० । शपींच् आक्रोशे । शप्यते शप्यति ॥

अथ यान्तौ सेटौ च ॥

917. चायृग् पूजानिशामनयोः । चायते चायति चचाये चचाय । ऋदित्त्वाङ्ङे न ह्रस्वः अचचायत् । चायिता । चायः की यङि चेकीयते । अपाच्चायश्चिः क्तौ अपचितिः । अपचित इति क्ते वा निपातनात् अपचितः अपचायितः । उणादौ चायः केक चेत्यये केकयो राजा ३६६ । चायः के चेति तुनि केतुः ७७८ । चायेर्नो ह्रस्वश्च वेत्यसि चणश्चाणश्चाचम् । बाहुलकाण्णत्वम् । णत्वं नेच्छन्त्येके ९९७ ॥

918. व्ययी गतौ । व्ययते व्ययति वव्यये वव्याय । व्यञ्जनादेरिति वा वृद्धेर्न श्विजाग्रिति प्रतिषेधात् अव्ययीत् । व्ययिता । णौ व्याययति । अचि व्ययः । व्ययण् वित्तसमुत्सर्गे । अदन्तः व्यययति ॥

अथ लान्तः सेट् च ॥

919. अली भूषणपर्याप्तिवारणेषु । अलते अलति आले आल । सनि अलिलिषते अलिलिषति । अचि अलम् । निषेधेलंखल्विति निर्देशान्मान्तत्वं निपात्यतेव्ययश्चायम् । भूषादरेति भूषायां गतित्वे अलंकृत्य कन्यामुपयच्छते । अत्र गतिक्किति समासे क्त्वो यप् । पर्याप्तौ अलं मल्लो मल्लाय । अत्र शक्तार्थेति चतुर्थी । वारणे अलं कृत्वा । अत्र निषेधेलमिति क्त्वा । उणादौ निष्कतुरुष्केति के निपातनात् अलर्क उन्मत्तः श्वा २६ । दृकृन्निस्यके अलकं चूर्णकुन्तलः । अलका पुरी २७ । क्रीकल्यलीतीकि अलिकं ललाटम् ३८ । स्यमिकपीतीके अलीकं मिथ्या । अलीका पण्यस्त्री । व्यलीकमपराधः । व्यलीका लज्जा ४६ । कल्यलीतीन्दकि अलिन्दो द्वारामस्थूणा २४६ । शल्यलेरुचात इति वे उल्वं कललम् ५११ । कृशृकुटीति त्वा णिदिः आलिः सखी । अलिर्भ्रमरः ६११ । अलक्त इति स्वरक्तशब्दस्य लत्वे । परस्मैपदिनमेनमन्ये मन्यन्ते ॥

अथ वान्तौ सेटौ च ॥

920. धावृग् गतिशुद्ध्योः । धावते धावति दधावे दधाव धाविता । उदित्वात् क्त्वि वेट् धौत्वा । अत्रानुनासिके चेति वस्योटि ऊटेत्यौत्वम् । पक्षे धावित्वा । वेट्त्वात् क्तयोर्नेट् धौतः धौतवान् पादौ । कथं धावितः धावितवान् । सत्यपि वेट्त्वे गतौ क्तयोरिट्प्रतिषेधस्यानित्यत्वात् । णके धावकः । मन्यनुनासिके चेत्यूटि सुधौमा । वनि व्योरिति वस्य लुकि सुधावा । विचि सुधाः । क्विप्यूटि सुधौः । क्तौ धौतिः । क्तेनिट्त्वात् क्तेट इत्यप्रत्ययो नास्ति ॥

921. चीवृग् झषीवत् । झषी आदानसंवरणयोर्वक्ष्यते तद्वदयमप्यादानसंवरणयोरित्यर्थः । चीवते चीवति चिचीवे चिचीव चीविता । ऋदित्वाङ्डे आचिचीवत् । अनृदिदयमित्येके । तन्मते ङे ह्रस्वे अचीचिवत् । उणादौ जठरेति निपातनादरे चीवरं मुनिवासः । चिनोतेर्वा वरटि दीर्घे च ४०३. ४४३ ॥

अथ शान्तः सेट् च ॥

922. दाशृग् दाने । दाशते दाशति ददाशे ददाश दाशिता । ऋदित्वाङ्डे अददाशत् । दाश्वत्साह्वदिति निपातनात्फलवत्कर्तर्यपि क्वसौ द्वित्वेटोऽभावे दाश्वान् । घञि दाशतेऽस्मै दाशः । पुरो दाश्यते पुरोडाशः । दुःखेन दाश्यते दूडाशः । पृषोदरादित्वात्साधू ॥

अथ पान्ता नव त्विषीवर्जाः सेटश्च ॥

923. झषी आदानसंवरणयोः । झषते झषति जझषे जझाष झषिता । क्ते झषितम् । अचि झषः । झष हिंसायाम् । झषति ॥

924. भेषृग् भये । भेषते भेषति बिभेषे बिभेष भेषिता । ऋदित्वाङ्डे न ह्रस्वः अबिभेषत् । णौ भेषयति ॥

925. भ्रेषृग् चलने च । चकाराद्भये । भ्रेषते भ्रेषति बिभ्रेषे बिभ्रेष भ्रेषिता । ऋदित्वाङ्डे न ह्रस्वः अबिभ्रेषत् । णौ भ्रेषयति । घञि भ्रेषः ॥

926. पषी बाधनस्पर्शनयोः । स्पर्शनं मन्थनम् । पषते पषति पेषे पपाष पषिता । क्ते पषितम् । घञि पाषः । उणादौ पषो णिदित्याणे पाषाणः १९२ । अयं स्पशीत्येके । स्पशते स्पशति । आनि स्पशश्चरः । सेयमुभयतः स्पाशा रज्जुः । स्पाशभान्यः । परस्पश उपोद्घातः । पषण् बन्धने । पाषयति । पषण् अनुपसर्गोदन्तः पषयति ॥

927. लषी कान्तौ । कान्तिरिच्छा । भ्रासम्लासेति वा श्ये अभिलष्यते अभिलष्यति अभिलषते अभिलषति लेषे ललाष लषिता । लषपतेत्युकणि अभिलाषुकः ।

भृषाक्रोधार्थेत्यने अभिलषणः । व्यपाभेरिति घिनणि विलापी अपलापी अभिलाषी । घञि अभिलापः । उणादौ लषेः श् चेत्युने लशुनं कन्दविशेषः २८९ ॥

928. चपी भक्षणे । चपते चपति चेपे चचाप चपिता । क्ते चपितम् । घञि चापः । उणादौ दृकृन्नित्यके चपकं सरकः २७ । ऋकृन्नित्याले चषालो यूपवलयः ४७५ । चप हिंसायाम् । चपति ॥

929. छपी हिंसायाम् । छपते छपति चच्छपे चच्छ[ा]प छपिता छपितुम् ॥

930. त्विषीं दीप्तौ । त्वेषते त्वेषति तित्विषे तित्वेष । अनुस्वारेत्त्वाचेट् त्वेष्टा त्वेष्टुम् । हशिट इति सकि अत्विक्षत । क्रुत्संपदेति क्विपि त्विट् । उणादौ त्वष्टृक्ष-त्रेति तृप्रत्यये निपातनात् त्वष्टार्कः ८६९ । अवपूर्वो दाननिरसनयोश्चेत्येके । निरसन-मपाकरणम् । चकारादीप्तौ । अवत्वेषते अवत्वेषति ददाति निरस्यति दीप्यते चेत्यर्थः ॥

931. अपी 932 असी गत्यादानयोश्च । चकाराद्दीप्तौ । अपते अपति आपे आप अपिता अपित्वा ॥

अथ सान्तौ सेटौ च ॥

932. असी । असते असति आसे आस । आसेत्यसतेरिति वामनः । असिता । सते असक् भुवि । अस्ति । असूच् क्षेपणे । अस्यति ॥

933. दासृग् दाने । दासते दासति ददासे ददास दासिता । क्ते दासितम् । अचि दासः । गौरादित्वाड् ङ्याम् दासी । महादित्वाण्णिनि उदासी । घञि उदासः । णौ दान्तेति क्ते वा निपातनात् दस्तः दासितः ॥

अथ हान्तौ सेटौ च ॥

934. माहृग् माने । मानं वर्तनम् । माहते माहति ममाहे ममाह माहिता । ऋदित्त्वाङ्के न ह्रस्वः अममाहत् । अचि माहः । स्त्रियाम् माहा गौः ॥

935. गुहौग् संवरणे । गोहः स्वरे इत्यूत्वे गूहते गूहति जुगुहे जुगूह । औदि-त्वाद्वेट् गोढा गूहिता । इडभावपक्षे हशिट इति सकि दुहदिहेति वा तल्लुकि च अघुक्षत अगूढ । अगूहिष्ट । परस्मैपदे तु सको लुगभावे अघुक्षत् । अगूहीत् । स्वरेत इति सकोल्लुकि अघुक्षाताम् अघुक्षन्त । स्वरस्य परे इति प्राचः परस्मिन्नपि विधौ कर्तव्ये स्वरादेशस्य स्थानिवत्त्वमिष्यते । तेनाघ्राद्युकः परस्मिन्नन्तोदादेशे स्थानिवत्वादनतोन्त इत्यत्र भवति । वेट्त्वात् क्तयोर्नेट् गूढः गूढवान् । महगुहश्चेति सनीट्प्रतिषेधात् जुघुक्षति । णौ ङे अजूगुहत् । ये तु ह्रस्वं नेच्छन्ति तन्मते अजुगूहत् । कृवृषीति वा क्यपि गुह्यम् । पक्षे घ्यणि गोह्यम् । नाम्युपान्त्येति के गुहः । गिर्योषध्योर्भिदा-

दित्वादङि गुहा । अन्यत्र क्तौ गूढिः । उणादौ विदनगगनेत्यने निपातनात् गहनम् २७५ । तीवरधीवरेति वरटि निपातनात् गह्वरम् ४४४ ।

अथ क्षान्तः सेट् च ॥

936. म्लक्षी भक्षणे । म्लक्षते म्लक्षति मम्लक्षे मम्लक्ष म्लक्षिता । क्ते म्लक्षितम् । घञि म्लक्षः । अयं भक्षीरित्यन्ये । भक्षते भक्षति बभक्षे बभक्ष भक्षितुम् । क्ते भक्षितम् ॥

अथ द्युतादयः कृपौङ्पर्यन्ता आत्मनेपदिनोऽपि वर्णक्रमेण सेटश्च ।

पूर्वाचार्यानुवर्तनेन द्युतेः पूर्वं पाठः ॥

937. द्युति दीप्तौ । इदित्वादात्मनेपदम् । द्योतते दिद्युते । द्युद्भ्योऽद्यतन्यामित्यात्मनेपदिनोऽपि विकल्पनात्पक्षे शेषात्परस्मायिति परस्मैपदे लृदिद्द्युतादीत्यङि अद्युतत् । पक्षे व्यद्योतिष्ट । णौ ङे द्युतेरिति पूर्वस्येत्वे अदिद्युतत् । इङित इत्यने द्योतनशीलो द्योतनः । क्विपि विद्युत् । दिद्युद्ददिति क्विपि निपातनात् दिद्युदायुधम् । धौ व्यञ्जनादेरिति क्त्वासनोर्वा किस्वे द्युतित्वा द्योतित्वा दिद्युतिषते दिद्योतिषते । उणादौ द्युतेरादेश्च ज इतीसि ज्योतिः ९९१ । स्वार्थे के ज्योतिष्काः सूर्यादयः ॥

938. रुचि अभिप्रीत्यां च । चकाराद्दीप्तौ । अभिप्रीतिरभिलापः । मैत्राय रोचते दधि । अत्र रुचिकृप्यर्थेति चतुर्थी । द्युतादित्वादङि अरुचत् अरोचिष्ट । फलवत्कर्तरीणिगित इत्यात्मनेपदेऽणिगि प्राणीति परस्मैपदेन बाधिते परिमुहेति पुनर्विहिते परिरोचयते मैत्रं चैत्राय । रुच्याव्यथ्येति कर्तरि निपातनात् क्यपि रुच्यम् । भावे घ्यणि क्ते सेट्त्वात्कात्वाभावे रोच्यम् । क्ते रुचितः । भ्राज्यलङ्कृगितीष्णौ रोचनशीलो रोचिष्णुः । इङित इत्यने रोचनः । घञि न्यङ्क्वादित्वात्कत्वे रोकः । करणाधारे इत्यनटि रोचनी दृषत् । ण्यन्तान्नन्द्याद्यने रोचना वर्णजातिः । उणादौ प्यासिरमील्यने रोचनश्चन्द्रः । विरोचनः सूर्यो दानवश्च । रोचना गोपित्तम् २६९ । रुक्ममीष्मेति मे निपातनात् रुक्मं हिरण्यम् । रुक्मो मर्णः ३४६ । सोऽस्या अस्तीति रुक्मिणी । नाम्युपान्त्येति किः रुचिः ६०९ । मत्वर्थे रे रुचिरम् [४१६] । रुच्यर्चीतीसि रोचिः । वसुभी रोचते वसुरोचिरादित्यः ९८९ ॥

अथ टान्तास्त्रयः ॥

939. घुटि परिवर्तने । घोटते जुघुटे । द्युताद्यङि अघुटत् अघोटिष्ट । णके घोटकः । नाम्युपान्त्येति के घुटः । स्वार्थिके के घुटिका गुल्फास्थि ॥

940. रुटि 941 लुटि 942 लुठि प्रतीघाते । भासौ दीप्तावित्यन्ये । रोटते रुरुटे । द्युताद्यङि अरुटत् अरोटिष्ट । नाम्युपान्त्येति के रुटः । टान्तोऽयमित्यन्ये ॥

941. लुटि । लोटने लुलुटे । द्युताद्यडि अलुटत् अलोटिष्ट । लुट विलोटने । लोटति । लुटच् विलोटने । लुट्यति ॥

अथ ठान्तः ॥

942. लुठि । लोठने लुलुठे । द्युताद्यडि अलुठत् अलोठिष्ट । लुठ उपघाते । लोठति । लुठत् संश्लेषणे । लुठति ॥

अथ तान्तः ॥

943. श्विताङ् वर्णे । ङित्त्वादात्मनेपदे श्वेतते शिश्विते । द्युताद्यडि अश्वितत् अश्वेतिष्ट । आदित्त्वात् क्तयोर्नेट् श्वितः श्वितवान् । न वा भावारम्भे श्वेतितमनेन श्वित्तमनेन प्रश्वित्तः प्रश्वेतितः । घञि श्वेतः । उणादौ ऋज्यजीति किति रे श्वित्रं कुष्ठभेदः ३८८ ॥

अथ दान्तास्त्रयः ॥

944. ञिमिदाङ् स्नेहने । स्नेहनं स्नेहयोगः । मेदते मिमिदे द्युताद्यडि अमिदत् अमेदिष्ट । ञीत्त्वाज्ज्ञानेच्छेति वर्तमाने क्तः मिन्नः । अत्रादित्त्वान्नेट् । मिन्नवान् । न वा भावारम्भे इति वेट्प्रतिषेधे मिन्नमनेन मेदितमनेन प्रमिन्नः प्रमेदितः । अत्रेटि न डीङिति कित्त्वप्रतिषेधाद्गुणः । लिहाद्यचि मेदो म्लेच्छः । भञ्जिभासीति घुरे मेदनशीलो मेदुरः । उणादौ चिमिदीति किति त्रे मित्त्रम् ४५४ । असिल्यसि मेदो वसा ९५२ । ञिमिदाच् स्नेहने । मेद्यति । मिदुण् स्नेहने । मिन्दयति ॥

945. ञिक्ष्विदाङ् 946 ञिश्विदाङ् मोचने च । चकारात्स्नेहने । क्ष्वेदते चिक्ष्विदे । द्युताद्यडि अक्ष्विदत् अक्ष्वेदिष्ट । ञीत्त्वाद्वर्तमाने क्तः क्ष्विण्णः । अत्रादित्त्वान्नेट् । न वा भावारम्भे इति वेट्प्रतिषेधे क्ष्वेदितमनेन क्ष्विण्णमनेन प्रक्ष्वेदितः प्रक्ष्विण्णः प्रक्ष्वेदितवान् प्रक्ष्विण्णवान् । एष्विटि न डीङिति कित्त्वप्रतिषेधाल्लघोरिति गुणः । डान्तोयमित्येके । क्ष्वेडो विषः । क्ष्वेडा रवः । ञिक्ष्विदाच् मोचने च । क्ष्विद्यति ॥

946. ञिक्ष्विदाङ् । षः स इति सत्वे । स्वेदते । नाम्यन्तस्थेति षत्वे सिष्विदे । द्युताद्यडि अस्विदत् अस्वेदिष्ट । ञीत्त्वात्सति क्ते स्विन्नः स्विन्नवान् । अत्रादित्त्वान्नेट् । न वा भावारम्भे वेड्भावे स्विन्नमनेन स्वेदितमनेन प्रस्विन्नः प्रस्वेदितः । अत्रेटि न डीङिति कित्त्वाभावाद्गुणः । वौ व्यञ्जनादेरिति क्त्वासनोर्वा कित्वे स्विदित्वा स्वेदित्वा सिस्विदिषते सिस्वेदिषते । अत्र णिस्तोरेवेति नियमान्न षत्वम् । णिस्तोरेवेत्यत्र स्विदेर्वर्जनाण्णौ सनि षत्वाभावे सिस्वेदयिषति । घञि स्वेदः । ष्विदांच् गात्रप्रक्षरणे । स्विद्यति ॥

अथ भान्ताः पञ्च ॥

947. शुभि दीप्तौ । शोभते शुशुभे । द्युतादयडि अशुभत् अशोभिष्ट । नाम्युपान्त्येति के शुभम् । णौ नन्द्यादने शोभनः । इडित इत्यने शोभनशीलः शोभनः । भिदादिनिपातनादङि शोभा । उणादौ ऋज्यजीति किति रे शुभ्रः ३८८ । शुभत् शोभार्थे । शुम्भति । अत्र मुचादीति नः ॥

948. क्षुभि संचलने । संचलनं रूपान्यथात्वम् । क्षोभते चुक्षुभे । द्युतादयडि अक्षुभत् अक्षोभिष्ट । क्षुब्धविरिब्धेति निपातनादिडभावे क्षुब्धो मन्थः । क्षुभितोन्यः । क्षुभच् संचलने । क्षुभ्यति । क्षुभश् संचलने । क्षुभ्नाति । क्षुभ्नादित्वाण्णत्वाभावः ॥

949. णभि 950 तुभि हिंसायाम् । पाठे इति नत्वे नभते । णोपदेशत्वाद-दुरुपसर्गेति णत्वे प्रणभते नेभे । द्युतादयडि अनभत् अनभिष्ट । उणादौ असित्यसि नभः ९६२ । अणोपदेशोयमित्येके ॥

950. तुभि । तोभते तुतुभे । द्युतादयडि अतुभत् अतोभिष्ट । णभ तुभच् हिं-सायाम् । नभ्यति प्रणभ्यति । तुभ्यति । णभ तुभश् हिंसायाम् । नभ्नाति प्रणभ्नाति । तुभ्नाति ॥

951. स्रम्भूङ् विश्वासे । दन्त्यादि [:] । स्रम्भते सस्रम्भे । द्युतादयडि अ-स्रभत् अस्रम्भिष्ट । ऊदित्त्वात् क्त्वि वेट् स्रब्ध्वा स्रम्भित्वा । क्त्वेति सेटः कित्त्वाभा-वाच्चो व्यञ्जनस्येति नलोपाभावः । वेट्त्वात् क्तयोर्नेट् विस्रब्धः विस्रब्धवान् । वेर्विचेति घिनणि विस्रम्भशीलो विस्रम्भी । घञि विस्रम्भः । हान्तोयमिति कौशिकः । स्रंहते ॥

अथ शान्तः ॥

952. भ्रंशूङ् 953 स्रंसूङ् अवस्रंसने । शिङ्हे इति नस्यानुस्वारे भ्रंशते बभ्रंशे । द्युतादयडि अभ्रशत् अभ्रंशिष्ट । ऊदित्त्वात् क्त्वि वेट् भ्रष्ट्वा भ्रंशित्वा । वेट्त्वात् क्तयोर्नेट् भ्रष्टः । संज्ञायां कुत्सितेति कपि भ्रष्टकः । भ्रष्टवान् । यङि वञ्चस्रंसेति पूर्वस्यान्तो नी बनीभ्रश्यते । क्तेनिट्त्वात् क्तेट इत्यप्रत्ययाभावे स्त्रियां क्तौ भ्रष्टिः । घञि भ्रंशः । भ्रंशूच् अधःपतने । भ्रश्यति ॥

अथ सान्तौ ।

953. स्रंसूङ् । दन्त्यादिः । स्रंसते सस्रंसे । द्युतादयडि अस्रसत् अस्रंसिष्ट । मनि सिस्रंसिते । यङि सनीस्रस्यते । यङ्लुपि सनीस्रंसीति । ऊदित्त्वात् क्त्वि वेट् स्रस्त्वा स्रंसित्वा । वेट्त्वात् क्तयोर्नेट् स्रस्तः स्रस्तवान् । क्विपि उखेन उखया या स्रंसते उखास्रत् । अत्र स्रंस्ध्वंसिति पदान्ते सस्य दः । घञ्युपसर्गेति बाहुलकादीर्घः ।

स्त्रियां क्तौ स्रस्तिः । स्रसुङ् प्रमादे । यञ्चस्रसेत्यत्र ध्वंसिसहचरितस्य स्रसेर्ग्रहणादन्य- भावे यङि सास्रस्यते । अङभावे असस्रसिट । स्रसध्वसिसेत्यत्र तूभयोर्ग्रहणात् क्विपि द्वत्वे उदाहृत ॥

951 ध्वंसुङ् गतौ च । चकारादवस्रंसने । ध्वंसते दध्वंसे । द्युताद्यङि अध्वसत अध्वंसिष्ट । यङि यञ्चस्रसेति पूर्वस्य नी दनीध्वस्यते । ऊदित्त्वात् क्त्वि वेट् ध्वस्त्वा ध्वंसित्वा । वेट्त्वात् क्तयोर्नेट् ध्वस्तः ध्वस्तवान् । स्त्रियां क्तौ ध्वस्तिः । घञि ध्वंसः । क्विपि पर्णध्वत् ॥

अथ द्युताद्यन्तर्गणो वृतादिः पञ्चकः ॥

955 वृतूङ् वर्तने । वर्तनं स्थितिः । वर्तते ववृते । द्युताद्यङि अवृतत् अवर्तिष्ट । वृद्भ्य स्यसनोरिति विषये वात्मनेपदमात्मनेपदाभावे च न वृद्भ्य इति नेट् वर्त्स्यति वर्तिष्यते अवर्त्स्यत् अवर्तिष्यत । सनि विवृत्सति विवर्तिषते । यङ्यृमताभिति पूर्वस्य री वरीवृत्यते । णौ ङे ऋदृवर्णस्येति गुणापवादे ऋतो वा ऋत्वे अवीवृतत अववर्तत् । वर्तवृत्तमिति निपातनात् क्ते वृत्तस्तर्कः । ग्रन्थादन्यत्र वर्तितं कुङ्कुमम् । ऊदित्त्वात् क्त्वि वेट् वृत्त्वा वर्तित्वा । वेट्त्वात् क्तयोर्नेट् वृत्तः वृत्तवान् । णके वर्तकः । स्त्रियां वौ वार्तिकेति वेत्वे वर्तिका वर्तका वा शकुनिः । क्विपि गतिकारकस्येति दीर्घे नीवृत् उपावृत् । स्त्रियां क्तौ वृत्तिः । वृत्तिरस्त्यस्या वार्त्ता । व्यञ्जनाद्घञि वृत्ता अस्मिन्वर्तन्ते रथावर्तो ग्रामो गिरिश्च । घञ्युपसर्गस्येति बाहुलकाद्दीर्घः । स्वार्थादिति णमि हस्तवर्तं वर्तते । णौ हस्तवर्तं वर्तयति । उणादौ वृद्वृत्तिभ्यो वर्तकः वर्तिका वर्तका वा शकुनिः २७ । मवाकश्यामाकेत्याके निपातनात् वार्ताकी शाकविशेषः । तत्फलं वार्ताकम् । वन्ताक्युद्यबृहती । तत्फलं वृन्ताकम् ३७ । वतेस्तिक वर्त्तिका चित्रकरोपकरणम् ७८ । कञ्चजीति कित् ऐ वृत्र ३८८ । सिविवृतेर्यति या किदिः वर्तिः कण्ठाभरणम् । निर्वृतिः सुखम् । वर्तिर्दीपदशा ६१० । सहिवृतीत्यनौ वर्त्तनिः पन्था ६८० । मनिति मनि वर्त्म ९११ । वृतुञ् वरणे । वृत्यते । वृतण् भासार्थः । वर्तयति ॥

अथ दान्त ॥

956 स्यन्दौङ् स्रवणे । स्यन्दते सस्यन्दे । द्युताद्यङि अस्यदत् अस्यन्दिष्ट । निरभ्यनोश्चेति वा षत्वे निष्यन्दते निस्यन्दते अभिष्यन्दते अभिस्यन्दते । वृद्भ्य इति स्यसनोर्वात्मनेपद तदभावे च न वृद्भ्य इति नेट् स्यन्त्स्यति । आत्मनेपदे त्वौदित्त्वाद्वेट् स्यन्दिष्यते स्यन्त्स्यते सिस्यन्त्सते सिस्यन्दिषते सिस्यन्त्सते । यङि सास्यद्यते । यङ्लुपि सास्यन्दीति सास्यन्ति । क्तौ इडभावे स्कन्नस्यन्न इति कित्त्वाभावे

स्यन्त्वा। इटि तु क्त्वेति किच्चाभावे स्यन्दित्वा। यपि प्रस्यन्द्य। गादेरेव क्तः कि-
त्वाभाव इत्येके। तन्मते कित्त्वे नलुकि प्रस्यद्य। वेट्त्वात् क्तयोर्नेट् स्यन्नः स्यन्नवान्।
स्यदो जवे इति घञि निपातनात् गोस्यदः अश्वस्यदः। जवादन्यत्र तैलस्यन्दः घृतस्यन्दः।
उणादौ स्यासिरसीत्यने स्यन्दनः २६१। स्यन्दिसृजिभ्यां सिन्धरज्जौ चेत्युः सिन्धुः ७१७॥

अथ धान्तौ ॥

957. वृधुङ् वृद्धौ। वर्धते ववृधे। द्युताद्यङि अवृधत् अवर्धिष्ट। वृद्भ्यः स्यसनोरिति वात्मनेपदं तदभावे न वृद्भ्य इति नेट् वर्त्स्यति वर्धिष्यते विवृत्सति विवर्धिषते। ऊदित्त्वात् क्त्वि वेट् वृद्ध्वा वर्धित्वा। वेट्त्वात् क्तयोर्नेट् वृद्धः वृद्धवान्। क्तौ लिकि वा वृद्धिः। णौ नन्द्याद्यने वर्धनः सुखवर्धनः। भ्राज्यलंकृगितीष्णौ वर्धिष्णुः। उणादौ भीवृधीति रे वर्ध्रः ३८७। वृधण् भासार्थः। वर्धयति॥

958. शृधुङ् शब्दकुत्सायाम्। तालव्यादिः। शब्दकुत्सा पायुशब्दत्वात्। शर्धते शशृधे। द्युताद्यङि अशृधत् अशर्धिष्ट। वृद्भ्य स्यसनोरिति वात्मनेपदाभावे न वृद्भ्य इति नेट् शर्त्स्यति शर्धिष्यते शिशृत्सति शिशर्धिषते। ऊदित्त्वात् क्त्वि वेट् शृद्ध्वा शर्धित्वा। वेट्त्वात् क्तयोर्नेट् शृद्धः शृद्धवान्। घञि शर्धः शर्धंजहा माषाः। उणादौ डीगीबन्धीति डिम्बे शिम्बा बीजकोशी ३२९। नृनिगृधीति किद्धः शृधुः शर्धनः ८४४॥

959. कृपौङ् सामर्थ्ये। ऋर लृति लत्वे कल्पते। लृत्वे चक्लृपे। द्युताद्यङि अक्लृपत् अकल्पिष्ट। वृद्भ्यः स्यसनोरिति कृपः श्वस्तन्यामिति च वात्मनेपदाभावे न वृद्भ्य इति नेट्। आत्मनेपदे त्वौदित्त्वाद्वेट् कल्प्स्यति कल्पिष्यते कल्प्स्यते चिक्लृप्सति चिकल्पिषते चिक्लृप्सते कल्प्तास्मि कल्पितासे कल्प्तासे कल्प्तुम् कल्पितुम्। वेट्त्वात् क्तयोर्नेट् क्लृप्तः क्लृप्तवान्। णौ कल्पयति। ऋदुपान्त्येत्यत्र कृपिवर्जनान्ऋ-क्तिनकीति ये कल्प्यम्। णावचि कल्पः। यङि चलीक्लृप्यते। णौ क्ते अवकल्पितः। व्यञ्जनादित्याधारे घञि क्लृप्यन्ते यस्मिन्प्राणिनां भोगोपभोगा वृद्धिहानिभ्यामिति कल्पः कालविशेष उत्सर्पिण्यवसर्पिणीसमुदायः। उणादौ तृकृकृपीति कीटे कृपीटं निर्गन्धं जलं च १९१। कृपण् अवकल्कने। कल्पयति। कृपण् दौर्बल्ये। अदन्तः कृपयति॥

वृत् वर्तनम्। वृत् द्युतादि [:] २३ वृतादिः भ्वन्तर्गणो वर्तितो समाप्ताधिन्यर्थः। वृधेः क्विपि वृत् वर्धितौ पूर्णावित्येके॥

अथ ज्वलादयो यजादेः प्राक् पट्ठंशट्ठंकुटंगदरमित्रर्गाः सेटश्च वर्ण-क्रमेण निर्दिश्यन्ते। तत्रापि पूर्वाचार्यानुरोधेन पूर्वं

960 ज्वल दीप्तौ। शेषात्परस्मायिति परस्मैपदे ज्वलति जज्वाल ज्वलिता।

णौ घटादित्वाद्ध्रस्वे प्रज्वलयति। ज्वलह्वलेत्यनुपसर्गस्य वा ह्रस्वे ज्वलयति ज्वालयति। वा ज्वलादीति णे ज्वाल ज्वाला। पक्षेऽचि ज्वल। भूषाक्रोधार्थेत्यने ज्वलनशीलो ज्वलन। उणादौ नि-व-तुरुक्केति के निपातनात् उल्का २६। कम्बुकाशुकेत्युके निपातनात् उल्मुकम् ५७॥

अथ चान्त॥

961 कुच सपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। सपर्चन मिश्रता। प्रतिष्टम्भो रोधनम्। विलेखन कर्षणम्। कोचति चुकोच कोचिता सकुचित। णौ क्ते सकोचित। वा ज्वलादीति णे कोच। नाम्युपान्त्येति के कुच। घञि क्ते सेट्त्वात्कत्वाभावे उत्कोच सकोच॥

अथ तान्त॥

962 पत्लृ 963 पथे गतौ। पतति पपात पेतु। लृदित्वादङि श्वयतीति पप्तादेशो अपप्तत्। नेर्ङ्गदेति नेर्णत्वे प्रणिपतति प्रण्यपप्तत्। अगो धात्वादित्वाद्व्यवधानाभाव। सनीवृधेति वेट् अनिट्पक्षे रभलभेति स्वरस्येत्वे द्वित्वाभावे च पित्सति। इटि पिपतिषति। यङि वञ्चस्रसेति पूर्वस्यान्तो नी पनीपत्यते। भावकर्मणोरेव प्राप्तस्य घ्यणो भव्यगेयेति कर्तरि वोत्पत्तौ आपात्य। पक्षे आपात्यमनेन। वा ज्वलादीति णे पातो राहु। पक्षेऽचि पत पत्री। घञि उत्पात निपात। वेटो पत इति पतो वर्जनादिट्प्रतिषेधाभावे पतित पतितवान्। उद पत्यतीतीष्णो उत्पतनशील उत्पतिष्णु। लषपतेत्युकणि प्रपातुक। भूषाक्रोधार्थेत्यने पतन। नीदाविति त्रटि पत्त्रम्। विशपतेति णमि गेहानुप्रपातमास्ते। उणादौ शालिबलीत्याके पताका ३४। आङ पर्णतीकि आपतिक श्येन ३९। पतितमीत्यङ्गे पतङ्ग पक्षी ९८। वीपतिपम्यिभ्यस्तन पत्तन पुरविशेष २९०। वृगुनक्षीत्यत्रे पतत्र पत्त्रम् ४५६। पतिक्रूलूभ्यो णिदित्याले पातालम् ४७१। पले सल पत्सल प्रहार ६०४। कमिवमीति णिदि सपातिर्गृध्रराज ६१८। मात्मनात्मानिति मनि निपातनाण्णौ पाप्मा ९१६। पतण गतौ वा। अदन्त। शीङश्रद्धेत्याली पतयालु॥

अथ थान्तास्त्रय सेट्थ॥

963 पथे। पथति पपाथ पथिता। एदित्त्वाद्व्यञ्जनादेरिति वा वृद्धेर्न श्विजामिति प्रतिषेधे अपथीत्। वा ज्वलादीति णे पाथ। पक्षेऽचि पथ। उणादौ पथिमथिभ्यामितीनि पन्था ९२६॥

964 क्रथे निष्पाके। क्रथति चक्राथ क्रथिता। एदित्त्वाद्व्यञ्जनादेरिति वा वृद्धेर्न श्विजामिति प्रतिषेधे अक्रथीत्। वा ज्वलेति णे क्राथ। अचि क्रथ। घञि क्राथ। अतोनेकस्वरादिति मत्वर्थीये के क्राथिका यवागू॥

965. मथें विलोडने । मथति ममाथ मथिता । एदित्त्वाद्व्यञ्जनादेरिति वा-वृद्धेर्न श्विजागिति प्रतिषेधे अमथीत् । वा ज्वलेति णे माथः । पक्षेऽचि मथः । मथलप इति घिनणि प्रमथनशीलः प्रमाथी । घञि प्रमाथोऽश्वपरिमाणम् । उणादौ वाश्यसीत्युरे मथुरा ४२३ । मन्था इति तु मथ्नातेः ९२६ ॥

अथ दान्तौ ॥

966. षद्लृं विशरणगत्यवसादनेषु । विशरणं शदनम् । अवसादोऽनुत्साहः । श्रौतीति सीदादेशे सीदति । षः स इति सत्वे ससाद । सदोऽप्रतेरिति षत्वे निषीदति विषीदति निषसाद विषसाद । सनि निषिषत्सति विषिषत्सति । प्रतेस्तु षत्वाभावे प्रतिसीदति । नाम्यन्तस्थेति षत्वे सिषत्सति । लृदित्त्वादङि आसदत् । अनुस्वारेत्त्वादिट् सत्तः सत्तवान् । गृलुपेति गर्हार्थे यङि सासद्यते । वा ज्वलादीति णे सादः । बाहुलकात्सोपसर्गादपि णे निषादः विषादः । अचि सदः । क्विपि भीरुष्ठानादित्वात्षत्वे आदिषत् उपसत् पुष्करसत् । संपदादिक्विपि उपनिषत् । परिषीदन्त्यस्यामिति परिषत् । ग्रहादित्वाण्णिनि सादी निषादी । दाधेसीति रौ सादनशीलः सद्रुः । घञि सादः निषादः विषादः । स्त्रियां समजेति क्यपि निषद्या । आधारे व्यञ्जनादिति घञि घन्युपसर्गेति दीर्घे प्रासादः । उणादौ हुयामेति त्रे सत्त्रं यज्ञः ४५१ । कृगृभ्रिति वराटि निषद्वरः पङ्कः ४४१ । मनिति मनि सद्म ९११ । कमिवमीति णिदिः सादिरश्वारोहः सारथिश्च ६१८ । असित्यसि सदः सभा ९६२ ॥

967. शद्लृं शातने । शातनं तनूकरणम् । शदेः शितीत्यात्मनेपदे श्रौतीति शीयादेशे शीयते । शितोऽन्यत्र परस्मैपदे शशाद । अनुस्वारेत्त्वादिट् शत्स्यति । लृदित्त्वादङि अशदत् । णौ शादेरगतौ शात् पुष्पाणि शातयति । गतौ तु गाः शादयति । वा ज्वलेति णे शादस्तृणपङ्कौ । अचि शदः शदितः । क्षत्रियापशदः विशदः । णौ करणाधारे इत्यनटि पलाशशातनो दण्डः पलाशशातनी यष्टिः । उणादौ शदेरूच्चेति रे शूद्रः ३९४ । ताडिवञ्चीति रिः शद्रिर्मेघः ६९२ । जनिश्नीति रौ तादेशे न शद्रुः ८०९ ॥

अथ धान्तः ॥

968. बुध अवगमने । अवगमनं ज्ञापनम् । बोधति बुबोध बोधिता । वा ज्वलेति णे बोधः । पक्षे नाम्युपान्त्येति के बुधः । णौ गतिबोधेत्यणिक्कर्तुः कर्मत्वे बोधयति शिष्यं धर्मम् । अजातेरिति णिन् आवश्यकेति वा णिनि प्रतिबोधी । गम्यादिरित्याद्यर्थेति साधुः । घञि बोधः । उणादौ युयुजीनि किल्याने बुधान आ-

चार्यः २७७ । अनुस्वारेदयमित्येके । तन्मते अभौत्सीत् बोद्धा राज्ञाम् बुद्धः । बुधिंच् ज्ञाने । बुध्यते ॥

अथ मान्तौ ॥

969. टुवमू उद्गिरणे । उद्गिरणं भुक्तस्योर्ध्वगतिः । वमति ववाम । अनादेशादेरित्येत्वद्वित्वाभावयोर्न शसददवेति प्रतिषेधे जॄभ्रमेति वा प्रतिप्रसवे वेमतुः ववमतुः । वा ज्वलेति णे मोकमीत्यत्र वमेर्वर्जनाद्वृद्धिप्रतिषेधाभावे वामः । अचि वमः । वमिता । अमोकमीति ह्रस्वे णौ उद्वमयति । ज्वलह्वलेत्यनुपसर्गस्य वा ह्रस्वे वमयति वामयति । णौ नन्द्याद्यने वामनः । णके वामकः । घञि वामः । अङ्गादित्वान्मत्वर्थीये ने वामनः । जीणदृक्षीतीनि वमनशीलो वमी । ट्वित्वादथुः वमथुः । ऊदित्वात् क्त्वि वेट् वान्त्वा वमित्वा । वेट्त्वात् क्तयोर्नित्यमिडभावे प्राप्ते श्वसजपेति वेटि वान्तः वान्तवान् वमितः वमितवान् । उणादौ कमिवमीति णिदिः वामिः स्त्री ६१८ । इत इति वा ङ्याम् वाम्यपि । नायमृदिदित्यन्ये ॥

970. भ्रमू चलने । भ्रासभ्लासेति वा श्ये भ्राम्यति भ्रमति । बभ्राम । जॄभ्रमेति वैत्वे भ्रेमुः बभ्रमुः । ऊदित्वात् क्त्वि वेट् भ्रान्त्वा भ्रमित्वा । वेट्त्वात् क्तयोर्नेट् भ्रान्तः भ्रान्तवान् । वा ज्वलेति णे ज्वलादिपाठबलान्मोकमीति प्रतिषेधाभावे ञ्णितीति वृद्धौ भ्रामः । अचि भ्रमः । तृचि भ्रमिता । उणादौ कञ्चिचटीत्यरे भ्रमरः ३९७ । तृभ्रमीति इर्भ्रमश्च भ्रमिर्वायुः । बाहुलकाद्भ्रमादेशाभावे भ्रमिर्भ्रमः ६११ । भ्रमिगमीति डिद्रुः भ्रूः ८४३ । भ्रमूच् अनवस्थाने । भ्राम्यति ॥

अथ रान्तः ॥

971. क्षर सञ्चलने । सकर्मकश्चायमकर्मकश्च । क्षरति गौः पयो मुञ्चतीत्यर्थः । क्षरति जलं सञ्चलतीत्यर्थः । चक्षार क्षरिता । वा ज्वलेति णे क्षारः । गौरादित्वाद् ङ्याम् क्षारी । णे घ्यणि कृतं क्वचिदित्येके । अचि क्षरः अक्षरः ॥

अथ लान्ताश्चतुर्दश ॥

972. चल कम्पने । चलति चचाल चलिता । वा ज्वलेति णे चालः । अचि चलः । चराचरेति निपातनात् चलाचलः । यङ्लुपि चाचलश्चञ्चलः । कम्पने घटादित्वाण्णौ ह्रस्वे चलयति शाखाम् । अन्यत्र चालयति सूत्रम् । चालशब्देत्यने चलनशीलश्चलनः । घञि चालः । चलण् भृतौ । चालयति ॥

973. जल घात्ये । घात्यं जडत्वमतैक्ष्ण्यमित्यर्थः । जलति जजाल । वा ज्वलेति णे जालम् । अचि जलम् । डलयोरैक्यम् जडः । घ्यण्यनभिधाना-

द्विचैर्थे प्रत्ययौ । घञि जालम् । घञन्तस्यापि नपुंसकत्वं लोकात् । जलण् अपवारणे । जालयति ॥

974. टल 975 ट्वल वैक्लव्ये । विक्लव एव वैक्लव्यम् । टलति ट्वलति टटाल टट्वाल । वा ज्वलेति णे टालः ट्वालः । अचि टलः ट्वलः । टलितुम् ट्वलितुम् ॥

976. ष्ठल स्थाने । षः स इति सत्वे स्थलति तस्थाल स्थलिता । वा ज्वलेति णे स्थालम् । गौरादित्वाड् ङ्याम् स्थाली । अचि स्थलम् । स्त्रियां भाजगोणेति ङ्याम् स्थल्यकृत्रिमा । स्थलान्या । विकुशमीति षत्वे विष्ठलम् कुष्ठलम् शमिष्ठलम् । कपेर्गोत्रे कपीनां स्थलमिव स्थलमस्य कापिष्ठलः । षोपदेशत्वान्नाम्यन्तस्थेति षत्वे तिष्ठालयिषति । अषोपदेशोयमित्यन्ये ॥

977. हल विलेखने । विलेखनं कर्षणम् । हलति जहाल हलिता । वा ज्वलेति णे हालः हाला सुरा । अचि हलम् हलाहलम् । उणादौ पदिपठीति इः हलिः हडिः ६०७ ॥

978. णल गन्धे । गन्धोर्दनम् । पाठे इति नत्वे नलति । णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणलति परिणलति । ननाल नलिता । वा ज्वलेति णे नालम् नाला पद्मादीनां वृन्तम् नाली नाडी प्रणालम् प्रणाली प्रणालिका प्रणाडिका । अचि नलम् नलः नडः । आत इति डे नलदः ॥

979. वल प्राणनधान्यावरोधयोः । प्राणनं जीवनम् । धान्यमवरुध्यते यत्रेति धान्यावरोधः कुसूलः । ओष्ठ्यादिः । वलति ववाल । अनादेशादेरित्येत्वे द्वित्वाभावे न वेलतुः वेलुः । वलिता । वा ज्वलेति णे वालः । स्त्रियां वयस्यनन्त्ये इति ङ्यपवादेजादित्वादापि वाला । अचि वलः वलम् । उणादौ वृपृभ्रित्यने वलनः कुसुनः २०७ । वलि संवरणे । दन्त्यौष्ठ्यादिः । वलते ववले । वलण् प्राणने घटादिश्चेत्येके । वलयति ॥

980. पुल महत्त्वे । पोलति पुपोल पोलिता । वा ज्वलेति णे पोलः । पक्षे नाम्युपान्त्येति के पुलः पुलम् विपुलम् । उणादौ भुभृन्दीति कित्यके पुलको रोमाञ्चः २९ । पापुर्नीति कितीके पुलिकमुच्चधान्यम् ४१ । कल्यलीनीन्दकि पुलिन्दः २४६ । वृजितुर्नीति कितीने पुलिनम् २८३ । नाम्युपान्त्येति किदिः पुलिः [ ६०९ ] । अगिविनीत्यस्मिन्कि पुलस्तिः ६६० । अयं तुदादिरपीत्येके । पुलति । पुलण् समुच्छ्राये । पोलयति ॥

981. कुल बन्धुसंस्त्यानयोः । संस्त्यानं संघातः । कोलति चुकोल कोलिता । वा ज्वलेति णे कोलः सूकरः कोलं बदरम् । नाम्युपान्त्येति के कुलम् नकुलः ।

कफोलमिति तु कनेः पिञ्छोलेत्योले निपातनात् [ उणादौ ४९९ ] । उणादौ कलिपिलीति किल्याले कुलालः ४७६ ॥

982. पल 983 फल 984 शल गतौ । पलति पपाल पलिता । वा ज्वलेति णे पालः । अचि पलं मांसम् । कर्मणोणि गोपालः । उणादौ हृदयेतीते पलितं पाण्डुरः केशः केशपाकश्च २१० । अभ्रादित्वादः पलितमस्यास्ति पलितः । मृदिकन्दीत्यले पललं तिलकल्कः ४६८ । ऋकृश्रित्याले पलालम् ४७५ । शमिकमीति वले पल्वलमखातसरः ४९९ । पलण् रक्षणे । पालयति ॥

983. फल । फलति पफाल । तृत्रपफलेत्येत्वे द्विर्भावाभावे च फेलतुः फेलुः । फलिता फलिष्यति । वा ज्वलेति णे फालः कुशिकः । फाला इव तण्डुलाः । अचि फलम् ॥

984. शल । शलति शशाल शलिता । वा ज्वलेति णे शालः शाला । अचि शलं श्वाविद्रोम । उणादौ भीण्शलीति के शल्कः शकलम् २१ । शलिवलीत्याके शलाका ३४ । शल्यणेर्णिदित्यूके शालूकं कुमुदादिकन्दः ९१ । शल्यलेरुयात इति वे शुल्वम् ३११ । कृशृभ्यभे शलभः ३२९ । स्याशमेति ये शल्यम् ३५७ । याचादित्वात्के शल्यकः । मृदिकन्दीत्यले शललं श्वाविच्छूली ४६५ । कामिवमीति णिदिः शालिः ६१८ । माशालीति ण्यन्तान्मलौ शाल्मलिः ७०३ । फलिशल्योः पूर्वमधीतयोरपीह पाठो ज्वलादिकार्यार्थः शलेः परस्मैपदार्थश्च ॥

985. हुल हिंसासंवरणयोश्च । चकारादृतौ होलति जुहोल होलिता । वा ज्वलेति णे होलः । पक्षे नाम्युपान्त्येति के हुलः हुडः । उणादौ पृकाहृषीति किदुः हुडुर्मेषः [ ७२९ ] ॥

अथ शान्तः ॥

986. क्रुशं आह्वानरोदनयोः । क्रोशति चुक्रोश । हशिट इति सकि अक्रुक्षत् । अनुस्वारेत्त्वादनिट् क्रोष्टा आक्रोष्टा । वा ज्वलेति णे क्रोशः । बाहुलकात्सोपसर्गादपि णे उत्क्रोशः कुररः । पक्षे नाम्युपान्त्येति के क्रुशः । उपसर्गादेविति णके आक्रोशनशील आक्रोशकः । घञि आक्रोशः । क्रुश्यते उच्यतेऽध्वपरिमाणं यस्मात् क्रोशः । णके उत्क्रोशकः । उणादौ कृसिकमीति तुनि क्रोष्टुना ७७२ । कशीकृशीति शनिपि कृशा निशा ९०६ ॥

अथ मान्तः ॥

987. क्रम गतौ । कमति उत्कमति विकमति चकाम कमिता । वा ज्वलेति णे कामः । अचि कमः । गति गम्यमंमेति पूर्वस्यान्तो नौ चर्नीकम्यते । यदन्पि

चनीकसीति । स्थेशभासेति वरे विकसनशीलो विकस्वरः । उणादौ संनिव्यामित्युक्ते संकसत्यस्मात् संकसुकोऽस्थिरः । भीमादित्वादपादाने साधुः । विकसुको गुणवादी ५२ । कासिपदीति णिद्भः कासूः शक्त्यायुधम् ८३० ॥

अथ हान्तः ॥

988. रुहं जन्मनि । बीजजन्मनीत्यन्ये । बीजजन्माङ्कुरोत्पत्तिः । रोहति रुरोह । अनुस्वारेत्त्वानेट् रोढा । हशिट इति सकि अरुक्षत् । णौ रुहः प इति वा पादेशे रोपयति रोहयति । वा ज्वलेति णे रोहः । बाहुलकात्सोपसर्गादपि णे प्ररोहः आरोहः । नाम्युपान्त्येति के रुहो मृगः । छिन्नरुहः प्ररुहः । स्थादित्वाद्भावाकर्त्रोर्मूलविभुजादित्वाद्वा कर्तरि के बीजरुहा । अस्य साक्षादादिश्च्व्यर्थे इति कृगा योगे वा गतित्वे बीजरुहाकृत्य बीजरुहां कृत्वा गतः । क्षिपशीडिति वा कर्तरि क्ते खट्वामारूढः । क्तौ रूढिः । उणादौ हृश्येतीते रोहितो वर्णः । लत्वे लोहितः २१० । श्येतेति ङ्याम् रोहिणी । रुहिनन्दीति इत्यन्ते रोहन्तो द्रुमः । रोहन्त्योषधिः २२० । विपिनेति निपातनादिने रोहिणः [ २८४ ] । रियां रेवतेति ङ्याम् रोहिणी नक्षत्रम् । रुहेर्वृद्धिश्चेतीषे रौहिष तृणजातिः ५४८ । व्यन्तास्वरेभ्य इः रोहिर्मृगः ६०६, ६०८ । हमुरुहीतीति रोहिन्मृगः ८८७ । ऋजीगुजीति रुहिपि रुक्षो वृक्षः ९०६ ॥

अथात्मनेपदिनौ ॥

989. रमिं क्रीडायाम् । इदित्त्वादात्मनेपदे रमते । व्याङ्परेरिति परस्मैपदे विरमति आरमति परिरमति । वोपात् उपरमति उपरमते वा । गंगा भैरमुपरमति उपरमते वा । अन्तर्भावितण्यर्थोयं सकर्मकः । रेमे । यमिरमीतीटि सेन्ते च व्यरंसीत् व्यरंसिष्टाम् । यङि रंरम्यते । यङ्लुपि रंरन्ति । अनुस्वारेत्त्वानेट् रन्ता रन्तुम् । भव्यगेयेति कर्तरि निपातनाद्वे रम्यः । नन्द्यादने रमणः । रम्यादिभ्य इति कर्तर्यनटि रमणी । वा ज्वलेति णे रामः रामा । अनि रमः रमा । शोकापनुदेति निपातनात्के स्तम्बेरमो हस्ती । उणादौ पृपिन्तेति निपातनात सुरतो दमितो हस्त्यन्यो वा दान्तः २०४ । नीयुरमीति किति ये रम्यः २२७ । पथयुधेति निपातनात् सूरयो दान्तः २३१ । रमेस्त चेति मे रक्तम् २६४ । ऋभिरम्भे रमभः प्रहर्षः ३२१ । नाकिरमीत्यरसेरघाम्येति णे रमोरणः ३९३ । रश इति नु रम इति च रश्मिरमोरमि ९८२ । केचित्तु यमुं उपरमे । रमुं क्रीडायामित्युद्वितौ रमणादरधीयते । तन्मते उदित्त्वात् क्त्वि वेट् रन्त्वा रमित्वा । रन्ता रमिता ॥

